सन्तापमतुलं मातृपित्रोश्च कुर्वतन्त्वहम् ॥१२८॥
यदा प्राग्भवमालिख्य पटे त्वं दर्शयिष्यसि ।
लब्ध्वा जातिस्मृतिं त्वां तु परिणेष्यति सा तदा ॥१२९॥
एवंविधञ्च वृत्तान्तं श्रुत्वा कर्णामृतोपमम् ।
हृष्टचित्तौ मुनिं नत्वा यथागतमगादिमौ ॥१३०॥
कुमारो मन्त्रिपुत्रं तं बभाषे मित्रवत्सल ।
कथं पद्मावती कन्या परिणेया मयाधुना ॥१३१॥
रत्नसारस्ततोऽवोचत् कुमार ! शृणु मद्वचः ।
गत्वा रत्नपुरद्रङ्गे कुरु कार्यं यथोचितम् ॥१३२॥
चेतसीति विनिश्चित्य प्रस्थितौ तत्पुरं प्रति ।
अनेकाश्चर्यसम्पूर्णां पश्यन्तौ पथि भूमिकाम् ॥१३३॥
कियद्भिर्वासरैस्तौ च प्राप्तौ रत्नपुरान्तिके ।
पश्यन्तौ नगरोद्यानं तरुराजिविराजितम् ॥१३४॥
वापीकूपतडागानि प्रपादेवकुलानि च ।
क्रमादालोकयन्तौ तौ प्राप्तौ गोपुरसन्निधौ ॥१३५॥
धनञ्जयस्य तत्रास्ति यक्षस्यायतनं वरम् ।
गत्वा तत्कोणके सुप्तौ मन्त्रिभूराजनन्दनौ ॥१३६॥
रात्रेः कृष्णचतुर्दश्या स्मशाने प्रहरद्वये ।
मिलिता भूतवेतालराक्षसाः क्षिप्रगद्दपः ॥१३७॥

अद्य मे सफलं जन्म सफलं मेऽद्य जीवितम् ।
अद्य मे सफला यात्रा यज्जातं तव दर्शनम् ॥१४७॥
विनयावर्जितो यक्षो हृष्टोवोचदिदं वचः ।
कुमार मत्प्रसादेन संग्रामे विजयोस्तु ते ॥१४८॥
राजराजं मुदा नत्वा वरं लब्ध्वा वराशयः ।
चित्रसेनकुमारोथ समागान्मित्रसन्निधौ ॥१४९॥
वीरसेनसुतः सारत्नसारसुहृत्पुरः ।
वरलब्ध्यादिकं सर्वं वृत्तान्तञ्च न्यवेदयत् ॥१५०॥
पूर्णा यक्षपतेर्यात्रा विभाता च विभावरी ।
कुमारो मन्त्रिपुत्रश्च प्रापतुस्तौ चतुष्पथे ॥१५१॥
तस्मिन्नवसरे तत्र नृपः पद्मरथाभिधः ।
पुत्रीविवाहमुद्दिश्य घोषणामित्यकारयत् ॥१५२॥
यः कोपि पुरुषद्वेषं सुतायाः स्फेटयेन्नरः ।
अर्धराज्यं सुतां तस्मै निःसन्देहं ददाम्यहम् ॥१५३॥
आकर्ण्य घोषणामेवं हर्षपूरितमानसः ।
रत्नसारसुतं दृष्ट्वा कुमार इदमब्रवीत् ॥१५४॥
वाञ्छितार्था हि सिध्यन्ति प्रायः पुण्योदये नृणाम् ।
मित्र साहाय्यमेतस्मै तत्सुपर्णस्य गौरवम् ॥१५५॥
एवमुक्त्वा कुमारेण स्मृत्वा तद्यानिनो वचः ।

तावद्दानलकर्मयुक्ता दग्धा हंसी दवाग्निना[1] ॥१३
दृष्ट्वा दवाग्निना[1] दग्धां प्रियां वार्त्तावशिष्यताम् ।
दुःखपूराकुलो हंसो हृदयस्फोटतो मृतः ॥१३
एवं चित्रपटं दृष्ट्वा जातजातिस्मृतिस्मृतिः ।
मूर्च्छयाकुलचित्ता सा पतिता पृथिवीतले ॥१३
शीतोपचारतः सुस्थीभूता चिन्तयतीति सा ।
मद्वियोगातुरस्त्वान्तो हा हा हंसो मृतः किमु ॥१३
पुरुषेषु मुधा द्वेषः प्रचक्रे मूढया मया ।
एष चित्रधरो धीरो जीवो हंसस्य नान्यथा ॥१४
सखीभिः सार्द्धमित्येतां वार्त्तां यावत्करोत्यसौ ।
कुत्रापि कुमरस्तावद् गतो मित्रसमन्वितः ॥१४
क्षणान्तरं कुमारी तं यावत् पश्यति नाग्रतः ।
नरश्चित्रधरं तावत्तद्वियोगाद् रुरोद सा ॥१४
क्व गतश्चित्तचौरोसौ समर्पित्वा च मानसे ।
धूर्त्तेन धूर्तिता चाहं हा सखि त्वं तमानय ॥१४
*वसिऊण मुज्झ हियए जीवं गहिऊण कत्थ चलिओ
सहवासपरविडंबग गंगंमि गओ न मुज्झहसि ॥१
एवञ्च विलपन्ती सा भर्तुर्दुःखेन दुःखिता ।

1 Z दावा० ।　2 A adds यतः before verse

तावद्दावानलसंयुक्ता दग्धा हंसी दवाग्निना[1] ॥१६५॥
दृष्ट्वा दवाग्निना[1] दग्धां प्रियां वालोपरिस्थिताम् ।
दुःखपूराकुलो हंसो हृदयस्फोटतो मृतः ॥१६६॥
एवं चित्रपटं दृष्ट्वा जातजातिस्मृतिस्मृतिः ।
मूर्च्छयाकुलचित्ता सा पतिता पृथिवीतले ॥१६७॥
शीतोपचारतः सुस्थीभूता चिन्तयतीति सा ।
मद्वियोगातुरस्त्वान्तो हा हा हंसो मृतः किमु ॥१६८॥
पुरुषेषु मुधा द्वेषः प्रचक्रे मूढया मया ।
एष चित्रकरो धीरो जीवो हंसस्य नान्यथा ॥१६९॥
सखीभिः सार्द्धमित्येतां वार्तां यावत्करोत्यसौ ।
कुत्रापि कुमरस्तावद् गतो मित्रसमन्वितः ॥१७०॥
क्षणान्तरे कुमारी तं यावत् पश्यति नाग्रतः ।
नरश्चित्रधरं तावत्तद्वियोगाद् रुरोद सा ॥१७१॥
क्व गतश्चित्तचौरोऽसौ ममापि त्वा च मानसं ।
धूर्तेन धूर्तिना याद हा सखि त्वं समानय ॥१७२॥
[2]वमिऊण मुज्झ हियए जीवं गहिऊण कत्थ चलिओ सि ।
सहवासघरविहंगम गंगंमि गओ न मुज्झहमि ॥१७३॥
एवं विलपन्ती सा भर्तुर्दुःखेन दुःखिता ।

1 Z दवा० । 2 A adds यतः before verse 173.

जहाम परिपन्मर्ता दत्तनाला परम्परम् ।
लज्जाधोवदनो राजा सिंहासनमुपाययौ ॥२०२॥
फणाटिश: समुत्थाय कृत्वा भुजपराक्रमम् ।
यावद् गृह्णाति कोदण्डं कन्यावरणलम्पटः ॥२०३॥
तावत्कुलफणाटोपान् दृष्ट्वा सर्पान् भयार्दितः ।
स व्यलोकि सभालोकैः सतालं[1] हसितश्च तैः ॥२०४॥
काश्मीराधिपतिर्वीरो[2]ऽभिमान्यतुलविक्रमः ।
यावद् व्रजेद्धनुःपार्श्वे कनीरूपचमत्कृतः ॥२०५॥
पीडितः पीडया तावत् पतितः पृथिवीतले ।
हसितः पर्षदालोकैर्लज्जितः स्वासने गतः ॥२०६॥
एवमङ्गाधिपो भूपो यावद् गच्छति चाग्रतः ।
देवताधिष्ठितं तावद् दृष्ट्वा ज्वालाकुलं धनुः ॥२०७॥
भीतः सकललोकानां हास्यकोलाहलाकुलः[3] ।
त्रपानतमुखाम्भोजो निविष्टश्च निजासने ॥२०८॥
ततः पद्मरथो राजा चिन्तयामास चेतसि ।
अप्राप्तवाञ्छिता पुत्री कं वरं परिणेष्यति ॥२०९॥
कन्याप्यचिन्तयच्चित्ते नागतः प्राणवल्लभः ।
नूनं स्वयम्वराचारो जातो व्यर्थो ह्यभाग्यतः ॥२१०॥

1 Z सताल: । 2 A ०राभि०, Z ०रा: भि० । 3 Z ०कुलं ।

आरोपितं धनुर्दृष्ट्वा कुमार्या कुमरस्य च ।
वरमाला गले क्षिप्ता परमानन्दनन्दनः ।२१
अज्ञातस्य गले पुंसो दृष्ट्वा मालां प्रलम्बिताम् ।
रुष्टाः सर्वेऽपि भूपालाः सायुधाः समुपस्थिताः ॥२२
अजानन्त्या कुमार्यासौ वृतस्तत्किं सहामहे ।
नीचात्मानं निहत्यैनं ग्रहीष्यामो वयं कनीम् ॥२२१
उच्चरेवं ब्रुवाणास्ते श्मश्रुन्यस्तलसत्कराः ।
कठोरकवचव्रातपरित्रातवपुर्लताः ॥२२२॥
तुरङ्गमगताः केचित् केचिद्दन्तावलस्थिताः ।
रथाङ्गसंस्थिताः केचित् सङ्ग्रामाय दुढौकिरे ॥२२३॥
धनञ्जयाभिधं यक्षं चिन्तयित्वा स्वचेतसि ।
सारोपमः कुमारोऽपि रणायाभिमुखः स्थितः ॥२२४॥
सङ्ग्रामे दारुणे जाते कुमारेण समन्ततः ।
एकेनापि जिताः सर्वे मृगेशेन मृगा यथा ॥२२५॥
राजा पद्मरथो यावन्निवारयति भूपतीन् ।
अकस्मादाह भट्टश्च कुमारविरुदावलीः ॥२२६॥
श्रीवसन्तपुराधीशवीरसेननृपाङ्गजः ।
कुमारश्चित्रसेनोऽसौ चिरञ्जयतु भूतले ॥२२७॥
इति कर्णामृतं वाक्यं श्रुत्वा पद्मरथोऽब्रवीत् ।

अधमा मातुलैः ख्याताः श्वशुरैश्चाधमाधमाः ॥२३७॥
रत्नमालस्ततो गत्वा राज्ञो विज्ञप्तिका व्यधात् ।
यदाज्ञापयति स्वामी गम्यते स्वगृहं प्रति ॥२३८॥
निर्मिते दर्शने देव मातृपित्रोर्वियोगिनोः ।
वासरा बहवो जाताः प्रसद्याज्ञां प्रयच्छ तत् ॥२३९॥
अथ पद्मरथो राजा श्रुत्वा मन्त्र्युदितं वचः ।
स्वजामातृप्रयाणाय सामग्रीं कृतवांस्ततः ॥२४०॥
प्रयाणसमये पुत्रीं समारोप्य सुखासने ।
मातृपित्रादिको लोको दत्ते शिक्षामिमां वराम् ॥२४१॥
श्वश्रूश्वशुरशुश्रूषा[1] करणीया निरन्तरम् ।
भर्ता देव इवाराध्यः स्त्रीणां भर्ता हि देवता ॥२४२॥
दत्त्वा शिक्षामिमां पुत्रीं मिलित्वा स्वजनैः समम् ।
कुमारश्चालितो राज्ञा सुतासैन्यसमन्वितः ॥२४३॥
अनेकनगरग्रामान् समुल्लङ्घ्य कियद्दिनैः ।
पश्यन् कुतूहलं मार्गे वने प्राप्तो मनोरमे ॥२४४॥
न्यग्रोधपादपस्तत्र काननेऽस्ति मनोरमः ।
महाशाखाप्रशाखाभिः पत्रराजिविराजितः ॥२४५॥
अथ तस्य तरोः शीतच्छायायां सैनिकाः स्थिताः ।

1 Z °शुश्रूषाः ।

कुमारः परमानन्दान्ननाम जनकक्रमौ ॥२७३
पृष्ठा च कृत्रिमप्रेम्णा सुतस्य कुशलादिकम् ।
पुत्राधिरोपणार्थञ्च ददौ दुष्टतुरङ्गमम् ॥२७४
चातुर्यान्मन्त्रिपुत्रेण सदृशोन्यस्तुरङ्गमः[1] ।
सञ्चारितश्च[2] तत्कालं न ज्ञातं केनचित् पुनः ॥२७५॥
वाद्यमानेषु वाद्येषु वर्द्धापनपुरस्सरम् ।
जयमुच्चरत्सु भट्टेषु गीतगानमनोरमम् ॥२७६॥
यावत् प्रतोलीमायातः महेन महताथ सः ।
तावदागत्य मित्रेण तुरङ्गो वदने हतः ॥२७७॥
पश्चात्पादैर्मनागेष चचाल वसुधातले ।
प्रतोली सहसा तावत् पतिता सा जनोपरि ॥२७८॥
लोके हाहारवो जातो विलक्षोभून्महीपतिः ।
कुमारो मन्त्रिपुत्रेण रक्षितो मृत्युसङ्कटात् ॥२७९॥
अथ विस्मयचित्तोसौ वीरसेननरेश्वरः ।
आनयन्नन्दनं गेहे प्रीतस्तद्विनयादिना ॥२८०॥
कुमारश्चित्रसेनाख्यः सप्रासः सदने निजे ।
उपमातुः पदद्वन्द्वं ननाम प्रीतमानसः ॥२८१॥
मातस्ते कुशलं देहे पुत्रे च कुशलं तव ।

1 A तत्समोऽन्य०; Z ०न्यतु० । 2 A संचारि[त]श्च ।

कुमारः पद्मानन्दाश्रनाम जनकक्रमौ ॥२७३॥
पृष्टा च कृत्रिमप्रेम्णा सुतस्य कुशलादिकम् ।
पुत्राविशेषणार्थं च ददौ दुस्तुरङ्गमम् ॥२७४॥
चातुर्यान्मन्त्रिपुत्रेण मद्गोऽन्यस्तुरङ्गमः[1] ।
सन्नाहितश्च[2] तत्कालं न ज्ञातं केनचित् पुनः ॥२७५॥
वाद्यमानेषु वाद्येषु वन्दीजनपुरस्सरम् ।
जयमुच्चरत्सु भट्टेषु गीतगानमनोरमम् ॥२७६॥
यावत् प्रतोलीमायातः सहेन महताथ सः ।
तावदागत्य मित्रेण तुरङ्गो वदने हतः ॥२७७॥
पश्चात्पादैर्मनागेव चचाल वसुधातले ।
प्रतोली सहसा तावत् पतिता सा जनोपरि ॥२७८॥
लोके हाहारवो जातो विलक्षोऽभून्महीपतिः ।
कुमारो मन्त्रिपुत्रेण रक्षितो मृत्युसङ्कटात् ॥२७९॥
अथ विस्मयचित्तोऽसौ वीरसेननरेश्वरः ।
आनयन्नन्दनं गेहे प्रीतस्तद्विनयादिना ॥२८०॥
कुमारश्चित्रसेनाख्यः संप्राप्तः सदने निजे ।
उपमातुः पदद्वन्द्वं ननाम प्रीतमानसः ॥२८१॥
मातस्ते कुशलं देहे पुत्रे च कुशलं तव ।

1 A तत्समोऽन्य०; Z ०न्यतु० । 2 A संनाहि[त]श्च ।

भाजने वीरसेनस्य मुक्ताः सुन्दरमोदकाः ॥२६१॥
कुमारे सह मित्रेणोपविष्टेऽस्यैकभाजने ।
कुमारभाजने मुक्तौ मोदकौ तु तया पुनः ॥२६२॥
मोदकौ दृष्टमात्रौ तु हस्तलाघवविद्यया ।
गृहीतौ मन्त्रिपुत्रेण परौ मुक्तौ स्वशक्तितः ॥२६३॥
मोदकानन्तरं शालिमुद्गदालिमनोहरम् ।
सघरकघृतसंयुक्तं स्फुरद्दध्यादिगोरसम् ॥२६४॥
जनकेन समं भुक्त्वा शुचीभूय समुत्थितः ।
चित्रसेनकुमारोऽसौ मानसे मुमुदे भृशम् ॥२६५॥
ततश्च तिलकं कृत्वा दत्त्वा ताम्बूलमुत्तमम् ।
परिधाप्याम्बरालङ्कारादिकं प्रेषितौ गृहे ॥२६६॥
पद्मावती स्नुषा स्फूर्जदलङ्काराम्बरादिना ।
श्वश्रूसन्मानिता कामं समायाता निजे गृहे ॥२६७॥
दैवानुकूल्यतः पुंसामथवा पुण्ययोगतः ।
सुधायते विषं सर्पः पुष्पमालायते रयात् ॥२६८॥
यद्यप्यस्ति धराधीशो विमलाविप्रतारितः ।
तथापि चित्रसेने च वात्सल्यप्रेमतत्परः ॥२६९॥
कियत्यपि दिने राजाचिन्तयन्नक्रमञ्जसा ।
सद्गर्भे मारणोपायमचिन्तयमहं हहा ॥३००॥

सम्पत्तौ नियमः शक्तौ सहनं यौवने व्रतम् ।
दारिद्र्ये दानमत्यल्पं महालाभाय जायते ॥३१०॥
मायं व परकलत्तं जो मन्नइ कंचणं कयारसमं ।
जीवेसु य कुणइ दयं सो पुरिसो जंगमं तित्थं ॥३११॥
उपदेशमिति श्रुत्वा राजा राज्यधनादिषु ।
रागं मुमोच वैराग्याज्जलात् कौसुम्भवस्त्रवत् ॥३१२॥
वीरसेनो गृहे गत्वा पृष्ट्वामात्यं शुभे दिने ।
चित्रसेनाभिधं पुत्रं निजराज्ये[1] न्यवेशयत् ॥३१३॥
शृण्वन्तु भद्रा भूपाः सर्वे मन्त्रीश्वरास्तथा ।
स्थापितोऽस्ति सुतो राज्ये माननीयो हि मन्मम. ॥३१४॥
त्यक्तमोहस्ततो राजा मुत्कलापयति प्रियाम् ।
मत्यर्थितया त्वया स्थेयं दीक्षायां वयमुत्सुकाः ॥३१५॥
इति राज्ञो वचः श्रुत्वा प्रियाप्येनं व्यजिज्ञपत् ।
त्वां विना प्राणनाथाहं कथं प्राणान् धराम्यमून् ॥३१६॥
शृङ्गारः सुन्दरस्तावत् तावद्राज्यं सुखप्रदम् ।
भोगा भोगा वरास्तावद् यावद् भर्ता हि सन्निधौ ॥३१७॥
वीरसेनस्ततो राज्ञीं नावकीन सुतोऽप्ययम् ।
पाल्यमानस्त्वयात्यन्तं भविष्यति सुखप्रदः ॥३१८॥

1 A निजे ।

सर्वपापहरं[1] सम्पत्करं दुःखविदारकम् ॥३२८॥
इति मन्त्रिवचः श्रुत्वा पुण्यप्रवणमानसः ।
जीर्णोद्धारान् विनिर्माति दीनोद्धरणकर्मठः ॥३२९॥
अमारिपटहोद्घोषं स्वदेशेकारयन्नृपः ।
पोषं साधर्मिकाणाञ्च जिनार्चां कुरुते सदा ॥३३०॥
एवं विधम्भराधीशः प्रियया प्रिययान्वितः ।
रत्नसारमतः सारं पुण्यं पुष्णाति नित्यशः ॥३३१॥
आसने गमने पाने भोजने जिनपूजने ।
शयनेपि ममासन्नास्तिष्ठन्त्येते त्रयोपि हि ॥३३२॥
करवालस्फुरत्पाणिः[2] स्वामिभक्तिपरायणः ।
रत्नसारो महामात्यो नित्यं प्राहरिकोभवत् ॥३३३॥
तेषां श्रेयांसि भूयांसि प्रमोदात् कुर्वतां सताम् ।
भुञ्जानानां वरान् भोगान् गते काले कियत्यपि ॥३३४॥
अथान्येद्युर्विभावर्यां सनिद्रं सुप्तयोस्तयोः ।
श्यामलः पन्नगोदर्शि पल्यङ्कोपरि मन्त्रिणा ॥३३५॥
यथोक्तं वचनं स्मृत्वा खड्गमादाय वेगतः ।
पातितस्तेन घातेन भूमौ घोरो भुजङ्गमः ॥३३६॥
राज्या महाप्रदेशे च पतितं सर्पशोणितम् ।

1 Z सर्व । 2 Z ०स्फुरत्पाणिस्वामि० ।

एतद्वचनमाकर्ण्य स्वमात: कलानिधिः ।
मातमत्र ममालम्ब्य यमार्य यत्रमाचितम् ॥३३८॥
परिणीय प्रियामितामागच्छन्नीत्र वर्त्मनि ।
स्थिता वटतरोर्मूले जानन्ति स्वामिन: स्वयम् ॥३३९॥
पुरा दुष्टतुरङ्गेन्याबलिका विनिवारिता ।
न ज्ञाता स्वामिनान्येन मानवेनापि केनचित् ॥३४०॥
कथितं वचनं यावद् भूपतेस्तेन मन्त्रिणा ।
मज्जातो जानुमात्रस्तु मयी मन्त्री दृषन्मयः ॥३४१॥
चित्रसेनावनीशेनाग्रतो जल्पति भाषितः ।
मन्त्रिराज: समाचष्ट द्वितीयावलिकामपि ॥३४०॥
त्वयि प्रतोलीमायाति यावदसौ हतो मुखे ।
पातितश्च ययौ पश्चात् प्रतोली तावदापतत् ॥३४१॥
तद्वच:कथनाज्जातः कटी यावद् दृषन्मयः ।
पनर्भूमिभुजाभाणि जातं किं तु तदग्रत: ॥३४२॥
... राजन् सनन्धा ते मोदको परिवेषितौ ।
... ... मुक्तौ मयाज्ञापि न तत्त्वया ॥३४३॥
तृतीयावलिकावादि यावन्मित्रेण रंहसा ।
... ... कण्ठं यावत्स मन्त्रिराट् ॥३४४॥
... ज्ञात्वा पुनः पृष्टो महीभुजा ।

महायास्तादृशा ज्ञया यादृशी भवितव्यता ॥३६४॥
मित्रं[1] विना वृथा राज्यं वृथा देशो वृथा सुखम् ।
वृथा कोशो वृथा सैन्यं किं पुनर्जीवितं वृथा ॥३६५॥
तद्वियोगातुरो नूनं प्राणत्यागं करोम्यहम् ।
इष्टबन्धुवियुक्तानां नान्यद् दुःखनिवारणम् ॥३६६॥
विचिन्त्येति निजे चित्ते चित्रसेनो नराधिपः ।
मरणाय समुत्तस्थौ यावच्चिन्ताभराकुलः ॥३६७॥
ज्ञात्वा तावदभिप्रायं चित्ते राज्ञ्यत्यचिन्तयत् ।
असमञ्जसमुत्पन्नं राज्यक्षयनिबन्धनम् ॥३६८॥
आत्महानिश्च सर्वेषु लोकेषु वचनीयता ।
येन केनाप्युपायेन क्रियते काललङ्घनम् ॥३६९॥
राज्ञी हृदि विमृश्येति बभाषे भूपतिं प्रति ।
नाथ कातरता त्याज्यालम्बनीया हि धीरता ॥३७०॥
प्रिय दुःखे समुत्पन्ने मृत्युमिच्छन्ति कातराः ।
विवेकिनः पुनर्धीराः पुण्यं कुर्वन्ति भूरिशः ॥३७१॥
वल्लभैक उपायोऽस्ति करोषि मद्वचो यदि ।
दातव्यं दानशालायामर्थिनां दानमीहितम् ॥३७२॥
तेन लुब्धाः समेष्यन्ति दशदेशान्तरस्थिताः ।

1 Z मंत्रि ।

सहायास्तादृशा ज्ञेया यादृशी भवितव्यता ॥३६४॥
मित्रं[1] विना वृथा राज्यं वृथा देशा वृथा सुखम् ।
वृथा कोशो वृथा सैन्यं किं पुनर्जीवितं वृथा ॥३६५॥
तद्वियोगातुरो नूनं प्राणत्यागं करोम्यहम् ।
इष्टबन्धुवियुक्तानां नान्यद् दुःखनिवारणम् ॥३६६॥
विचिन्त्येति निजे चित्ते चित्रसेनो नराधिपः
मरणाय समुत्तस्थौ यावच्चिन्ताभराकुलः ॥३६७॥
ज्ञात्वा तावदभिप्रायं चित्ते राज्ञीत्यचिन्तयत् ।
असमञ्जसमुत्पन्नं राज्यक्षयनिबन्धनम् ॥३६८॥
आत्महानिश्च सर्वेषु लोकेषु वचनीयता ।
येन केनाप्युपायेन क्रियते काललङ्घनम् ॥३६९॥
राज्ञी हृदि विमृश्येति बभाषे भूपतिं प्रति ।
नाथ कातरता त्याज्यालम्बनीया हि धीरता । ३७०॥
प्रिय दुःखे समुत्पन्ने मृत्युमिच्छन्ति कातराः
विवेकिनः पुनर्धीराः प्रयत्नं कुर्वन्ति भूमिपः ॥३७१॥
वल्लभैक उपायोऽस्ति करोमि मद्वचो यदि ।
दातव्यं दानशालायामर्थिनां दानमीहितम् ॥३७२॥
तेन लुब्धाः समेष्यन्ति दशदेशान्तरस्थिताः ।

1 Z मंत्रि ।

कियद्भिर्दिवसैः प्राप वसन्तपुरपत्तनम् ॥४००॥
हर्षिताश्च प्रजाः सर्वा भूमिवल्लभदर्शनात् ।
पद्मावतीं प्रियां दृष्ट्वा जाता प्रेमपरायणा ॥४०१॥
आसन्नप्रसवां राज्ञीं तस्मिन्नवसरे नृपः ।
समालोक्य शुभं प्राप चित्रसेननरेश्वरः ॥४०२॥
वाञ्छितार्थाः सिद्धा मे नूनं पुण्यप्रभावतः ।
इति ध्यात्वा निजं राज्यं पालयामास भूपतिः ॥४०३॥
चित्रसेननराधीशः परोपकृतिकर्मठः ।
धर्मध्यानमनाः कामं गमयामास वासरान् ॥४०४॥
शुभे दिने शुभे लग्ने शुभस्थानगतग्रहे ।
मुदा पद्मावती राज्ञी सुतरत्नमजीजनत् ॥४०५॥
महानन्दान्महीपालः पुत्रजन्ममहोत्सवे ।
पूजां सर्वत्र चैत्येषु चकार दिवसाष्टकम् ॥४०६॥
अमारिपटहोद्घोषं पौरं सर्वजनस्य च ।
दीनोद्धारादिकं पुण्यं कारयामास भूपतिः ॥४०७॥
इत्युत्सवक्रमाज्जातेष्वेकादशदिनेष्वथ ।
भूपतिर्बहुमानेनाभोजयत् स्वजनान् बहून् ॥४०८॥
भोजनानन्तरं सर्वे मिलिता राजमन्दिरे ।
सन्मानदानवस्त्राद्यै नामस्थापनसत्क्षणे ॥४०९॥

राज्ञोदरे सम्पूर्णे पुत्रो जातः पुण्यप्रभावतः ।
ततस्तद्गुणमानेन धर्मसेनाभिधाऽस्य च ॥४१०॥
तैस्तैः स्वजनैः सार्द्धं पद्मावत्या समन्वितः ।
शाश्वतेषु चैत्येषु दानशालीं गतो नृपः ॥४११॥
रत्नसारं समुत्पाद्य स्मृत्वा यथार्थां हृदि ।
यथोक्तविधिना तस्य स्नानपूजादिकं व्यधात् ॥४१२॥
ततः पद्मावती राज्ञी निजोत्सङ्गस्थिताङ्गजा ।
परमेष्ठ्यभिधं मन्त्रं संस्मृत्येति वचोऽब्रवीत् ॥४१३॥
शृण्वन्तु लोकपाला भोः सूर्यचन्द्रग्रहादयः ।
क्षेत्रपालाश्च वेतालाः सर्वे वैमानिकास्तथा ॥४१४॥
मनसा वपुषा वाचा शीलं चेन्मेऽस्ति निर्मलम् ।
तदा हि मत्करस्पर्शात् सज्जीभवतु मत्सुतः ॥४१५॥
इत्युक्त्वा स्वकरस्पृष्टमात्रेणोत्पन्नचेतनः ।
तत्क्षणादुपविष्टोऽसौ यथा सुप्तोत्थितो नरः ॥४१६॥
चित्रसेनस्ततो राजा रत्नसारसमन्वितः ।
स्वराज्यं पालयामास धर्मकर्मपरायणः ॥४१७॥
मन्त्रिपद्मावतीपुत्राद्यैस्तत्र नरनायकः ।
ज्ञात्वा पुण्यफलं साक्षात् विशेषाद्धर्मतत्परः ॥४१८॥
शिष्टानां पालने धीमानशिष्टानामपालने ।

कीर्ति विस्तारयामास दानशीलादिपुण्यतः ॥४१९॥
अन्येद्युश्च सभासीनं मन्त्रिसामन्तशोभितम् ।
नरः कोऽपि समागत्य विज्ञापयति भूपतिम् ॥४२०॥
देव सिंहपुरस्वामी वर्तते सिंहशेखरः ।
गर्विष्ठो भूमिमन्येन भाग्यमविनाशकृत् ॥४२१॥
स्थित्वा मार्गविषमे मुष्णाति पथिकान् बहून् ।
न सेवां कुरुते दण्डं न ददाति कदाप्यसौ ॥४२२॥
सापराधमिति श्रुत्वा भूपो दूतमुखात्ततः ।
दुन्दुभिं दापयामास कोपाटोपारुणेक्षणः ॥४२३॥
समर्प्य कवचानेकशस्त्रालीतुरगादिकम् ।
सारसत्कारतः सज्जीचकार सुभटान् नृपः ॥४२४॥
चतुरङ्गचमूयुक्तश्चित्रसेननरेश्वरः ।
वाद्यमानस्फुरद्वाद्यश्चचाल स्वपुराततः ॥४२५॥
अतुच्छमत्सराक्रान्तः कियद्भिर्वासरैस्ततः ।
भूपतिर्दण्डकारण्ये सम्प्राप भयभीषणे ॥४२६॥
निशीथसमये जाते सुप्तेषु सैनिकेष्वथ ।
अकस्मात्क्रन्दनारावं श्रुत्वा राजा व्यचिन्तयत् ॥४२७॥
अस्यां निर्मानुषाटव्यां श्रूयते क्रन्दनं किमु ।
विमृश्येति निजे चित्ते खड्गपाणिर्नृपोऽचलत् ॥४

आक्रन्दनानुसारेण गतो पादपिकपरभुवम् ।
नानातरोरधोभागेपश्यत् कमपि पूरुषम्[1] ॥४२९॥
बद्धं निगडबन्धेन कीलितं लोहकीलकैः ।
दिव्यरूपधरं दिव्यवेषालङ्कारसुन्दरम् ॥४३०॥
चित्रसेननराधीशः पप्रच्छेति नरं प्रति ।
कस्त्वं कस्य सुतः कास्यावस्था ते कथमीदृशी ॥४३१॥
ततः स पुरुषः प्राह पीडया पीडितोपि सन् ।
ममाश्चर्यकरीं वार्तां शृणु वीरशिरोमणे ॥४३२॥
बन्धनाच्छोटय त्वं मां कीलकांश्च निराकुरु ।
कथयामि स्ववृत्तान्तं निःशल्यः सन् भवत्पुरः ॥४३३॥
तथा कृते नरः प्राह वैताढ्याभिधपर्वते ।
उत्तरश्रेणिशृङ्गारं नाम्ना हेमपुरं पुरम् ॥४३४॥
तत्रास्ति विश्वविख्यातो विद्याधरशिरोमणिः ।
दानादिगुणसम्पूर्णो राजा हेमरथाभिधः ॥४३५॥
तत्प्रिया हेममालास्ति हेममालेव निर्मला ।
तत्कुक्षिसम्भवो नाम्ना हेममालीत्ययं सुतः ॥४३६॥
हेमचूलाप्रियायुक्तः स्थितः सुन्दरमन्दिरे ।
सारसंसारसौख्यानि विलसामि यथ[illegible] ॥४३७॥

1 A पुरु० ।

अन्यदा सकलत्रस्य सस्नातः सुस्थितस्य मे ।
नन्दीश्वरस्य द्वीपतीर्थयात्रामनोरथः ॥४३८॥
मनोरमविमानस्थ. प्रियया प्रिययान्वितः ।
तीर्थानि प्रणमन् मार्गे यावदत्र समागतः ॥४३९॥
मत्पृष्ठतः समायातो मत्प्रियालुब्धमानसः ।
रत्नचूडाभिधो दुष्टविद्याधरभटैर्वृतः ॥४४०॥
निष्कृपः किल पापात्मा विधाय मम बन्धनम् ।
मद्वल्लभां समादाय जगाम निजधाम सः ॥४४१॥
हेममालिवचः श्रुत्वा उपकारपरात्मना ।
व्रणसंरोहिणीलेपात् सज्जाङ्गः सहसा कृतः ॥४४२॥
राज्ञश्चरणमानम्य हेममाली व्यजिज्ञपत् ।
मोचितोहं यथा देव तथा वालय मत्प्रियाम् ॥४४३॥
भूपस्तद्वचनं श्रुत्वा परोपकृतितत्परः ।
तेन सार्द्धं विमानस्थश्चचालाचलविक्रमः ॥४४४॥
भूपतिः कियतीं भूमिं यावद् गच्छति चाग्रतः ।
स्थितस्तरुतले तावद् दृष्टः पापमना रिपुः ॥४४५॥
पारदारिक पापात्मन् क गमिष्यसि साम्प्रतम् ।
चित्रसेननरेशेन इक्तिनश्चेति कम्पितः ॥४४६॥
आकस्मिकवचः श्रुत्वा सर्वे भीताः पलायिताः ।

एकाकी स स्थिरधीरः सङ्ग्रामाय समुद्यतः ॥४४७॥
क्रीडाग्रामकरे युद्धे सञ्जाते च परस्परम् ।
चित्रसेनधरेशेन निर्जितः पारदारिकः ॥४४८॥
स मृत्युभयभीतः सन् समादाय मुखे तृणम् ।
पतित्वा भूपतेः पादौ पुनरेवं व्यजिज्ञपत् ॥४४९॥
देव. काञ्चिपुरेशस्य रत्नचूडाभिधः सुतः ।
विद्यां साधयितुं शैले गतोऽहं गन्धमादने ॥४५०॥
विद्यायाः साधनं कृत्वा परिवारपरावृतः ।
पश्यन् विश्वम्भराश्चर्यमभ्रमं च यदृच्छया ॥४५१॥
हेममाली प्रियायुक्तो मिलितो मम सन्मुखम् ।
विलोक्य तद्वधूरूपं जातोऽहं कामपीडितः ॥४५२॥
मामन्धापयति मुक्त्वा विद्याधिष्ठायिका गता ।
ततो विगतविद्योऽहं जातो विह्वलमानसः ॥४५३॥
समीक्ष्य तदवस्थं मां हसितं मित्रमण्डलम् ।
विलोक्य कौतुकं काम हास्यं कस्य न जायते ॥४५४॥
अट्टहासमाकर्ण्य कुपितो हेममाल्यसौ ।
विरूपवचनैर्गालिं ददानो न निवर्तते ॥४५५॥
ततः कोपान्मया देव यन्त्रितः कीलितोऽप्यसौ ।
तत्कान्तां च समादाय स्थितोऽहं काननान्तरे ॥४५६॥

विनोदेन मया पृष्टा कासि त्वं कस्य वा सुता ।
ततः श्रुते समाचारे ज्ञातासौ गोत्रकन्यका ॥४५७॥
तावत्त्वदीयहक्काभिर्यस्याः कातरा मम ।
कांदिशीका[1] द्रुतं नष्टाः सिंहनादादिव द्विपाः ॥४५८॥
मया शीलव्रतं पूर्वं गृहीतं गुरुसन्निधौ ।
अन्यथा कामिनः केपि पृच्छन्ति किं कुलादिकम् ॥४५९॥
रत्नचूडवचः श्रुत्वा चित्रसेननराधिपः ।
प्रशंसां कुरुते तस्य वारं वारं गुणादरः ॥४६०॥
उपकारपरा धन्या दीनोद्धारपरास्तथा ।
परकार्यकरा धन्या धन्याः शीलधरा नराः ॥४६१॥
हेममाली नमस्कृत्य राज्ञश्चरणपङ्कजम् ।
इति विज्ञापयामास विनयानतमस्तकः ॥४६२॥
जीवदानं धराधीश न दत्तं मम केवलम् ।
कुलं हेमरथस्यापि ब्रुडदघाद्धृतं त्वया ॥४६३॥
सद्यः प्रसादमाधाय देव मामनृणीकुरु ।
रत्नद्वयञ्च मत्पार्श्वाद् गृहाणाश्रितवत्सल ॥४६४॥
अनेकतीर्थयात्रार्थं नराधीश नमस्तले ।
पल्यङ्केन यथाकामगामिना गम्यतेमितः ॥४६५॥

1 Z कादिशीका ।

पश्यन् सद्ग्रामकौशलं चित्रसेननरेश्वरः ।
रत्नशेखरसैन्यस्य प्रशंसां कुरुतेतराम् ॥४८४॥
यदा सिंहपुरस्वामी सद्ग्रामात् निवर्तते ।
दण्डरत्नं तदा कोपादानीतं करगोचरे ॥४८५॥
परमेष्ठ्यभिधं मन्त्रं स्मृत्वा निजगुरुं पुनः ।
वामतो यत्प्रयोगेन दण्डरत्नं न नोदितम् ॥४८६॥
वैरिसेना ततः सर्वा पतिता भूमिमण्डले ।
एक एव स्थितस्तत्र रत्नशेखरभूपतिः ॥४८७॥
तुरङ्गमात् समुत्तीर्य विनयानतमस्तकः ।
ननाम भूपतेः पादौ न हि प्रीतिर्भयं विना ॥४८८॥
करौ च कुड्मलीकृत्य भूमिजानि व्यजिज्ञपत् ।
अपराधिषु यो दण्डस्तं दण्डं कुरु मे विभो ॥४८९॥
इति श्रुत्वा धराधीशेन कृपापूरितचेतसा ।
सुष्ठ्वा संस्थापितं दण्डं तेना गुप्तमवस्थिता ॥४९०॥
चित्रसेननरेशेन रत्नशेखरनामकः ।
गत्वा सिंहपुरद्रङ्गे स्थापितः कृतसेवकः ॥४९१॥
आज्ञायाः पालकं कृत्वा गृहीत्वा दण्डमङ्गणम् ।
अगाल्लाघवताधीशः ससैन्यः स्वपुरं प्रति ॥४[९२]
[illegible]मानस्फुरद्वाद्यस्तुरङ्गचमूवृतः

विज्ञापयति मद्वक्त्रान् मत्स्वामी रत्नशेखरः ।
नात्रागन्तव्यमुर्वीश स्वश्रेयो यदि वाञ्छसि ॥४७५॥
इति दूतवचः श्रुत्वा कुपितो मेदिनीपतिः ।
अवध्यो भूभुजां दूतो गच्छ गच्छ ममाग्रतः ॥४७६॥
भणनीयं स्वभूपाग्रे संनह्य त्वं स्थिरीभव ।
चित्रसेनः समायातस्त्वद्गर्वाग्निपयोधरः ॥४७७॥
गत्वा दूतेन विज्ञप्तो रत्नशेखरभूपतिः ।
आगतश्चित्रसेनोऽसौ राजन् सज्जीभव द्रुतम् ॥४७८॥
एतद्वचनमाकर्ण्य कोपप्रस्फुरिताधरः ।
चचाल सन्मुखं सद्यो रत्नशेखरभूमिपः ॥४७९॥
अन्योन्यमुभयोर्जाते सैन्ययोः किल सङ्गमे ।
योधा युद्धाङ्गणे योद्धुं सावधानाः स्थिताः पुनः ॥४८०॥
रथिका रथिभिः सार्द्धं गजस्थाश्च गजस्थितैः ।
हयस्था हयसंस्थैश्च चक्रुर्युद्धं परस्परम् ॥४८१॥
पत्रवाहप्रवाहेणाच्छादितं[1] गगनाङ्गणम् ।
क्व श्रमाकुलचित्तानां वीराणामातपच्छिदे ॥४८२॥
यथा विन्ध्याद्रिमध्यस्था गजा युध्यन्ति दुर्द्धराः ।
उभयोः सैन्ययोस्तद्वत् सञ्जातं समराङ्गणम् ॥४८३॥

1 Z कंकपत्रप्रवा० ।

पश्यन् सङ्ग्रामकौशल्य निजमनसि ...
रत्नशेखरसैन्यस्य प्रशमा ... ॥४८४॥
यदा सिंहपुरस्वामी सङ्ग्रामात् निवृत्त ।
दण्डरत्नं तदा क्षापादानीत ... ॥४८५॥
परमेष्ठ्याभिध मन्त्र स्मृत्वा निजगुरु ... ।
वामनो वसुधेशेन दण्डरत्न न ... ॥४८६॥
वैरिसेना ततः सर्वा पतिता भूमिमण्डले ।
एक एव स्थितस्तत्र रत्नशेखरभूपतिः ॥४८७॥
तुरङ्गमात् समुत्तीर्य विनयानतमस्तकः ।
ननाम भूपतेः पादौ न हि प्रीतिर्भयं विना ॥४८८॥
करौ च कुड्मलीकृत्य भूमिजानि ह्यजिज्ञपत् ।
अपराधिषु यो दण्डस्त दण्ड कुरु मे विभो ॥४८९॥
इति श्रुत्वा धरेशेन कृपापूरितचेतसा ।
सृष्ट्वा सञ्चारिते दण्डे सत्ता सुस्थाभवन्नृता ॥४९०॥
चित्रसेननरेशेन रत्नशेखरनामकः ।
गत्वा सिंहपुरद्रङ्गे स्थापितः कृतसेवक ॥४९१॥
आज्ञायाः पालकः कृत्वा गृहीत्वा दण्डमद्भुतम् ।
सञ्जातालबलापीशः ससैन्यः स्वपुरं प्रति ॥४९२॥
... नरपुरद्वायधुरङ्गचमूयुतः ।

आददानोतुलं दण्डं सीमस्थवसुधाभुजाम् ॥४९३॥
अनुक्रमेण सम्प्राप्तः पत्तनोपान्तकानने ।
मन्त्रिणा स्वमारेण श्रुतो राजा समागतः ॥४९४॥
भर्तुरागमनं श्रुत्वा पद्मावत्यपि हर्षतः[1] ।
उत्सवं कारयामास वसन्तपुरपत्तने ॥४९५॥
सन्मुखचलितो मन्त्री परिच्छदसमन्वितः ।
समस्तः पुरलोकोऽपि प्रमोदाञ्चितमानसः ॥४९६॥
उपायनं समादाय मिलितो मन्त्रिपुङ्गवः ।
पपात भूपतेः पादौ प्रभूतप्रेमपूरितः ॥४९७॥
भूपेन सहसोत्थाय समालिङ्ग्य च निर्भरम् ।
दत्त्वार्धमासनं तोषात्स पृष्टः कुशलादिकम् ॥४९८॥
ततोऽसौ स्वस्य पुत्रस्य पुरस्यान्तःपुरस्य च ।
गजवाजिरथादीनां पप्रच्छ कुशलं नृपः ॥४९९॥
ततो मन्त्रिवर्गेणचलितो समुत्सुकः ।
वनक्रीडां प्रकुर्वाणो गतो गोपुरसन्निधौ ॥५००॥
धर्मसेनाभिधः पुत्र आगतः सपरिच्छदः ।
पितुः पादयुगं भक्त्या ननामोद्दामसम्मदः ॥५०१॥
समालिङ्ग्य ततो भूपः पुत्रं प्रणयपूर्वकम् ।

1 A हर्षित: evidently for हर्षत. or हर्षिता ।

प्रवृत्तिं रचयामासुः पल्यङ्कस्य प्रमोदतः ॥५११॥
यदि पल्यङ्करत्नस्य प्रभावः प्रवरो भवेत् ।
अनेकानि च तीर्थानि न क्रियन्तेऽधुना कथम् ॥५१२॥
सभायां भूपतिर्देवि नान्यथा तस्य भाषितम् ।
दण्डः परीक्षितः पूर्वमधुनायं परीक्ष्यते ॥५१३॥
समग्रामपि सामग्रीं पूजोपकरणादिकाम् ।
समादाय सदानन्दात् पल्यङ्के ते स्थितास्त्रयः ॥५१४॥
अष्टापदाभिधं तीर्थं स्मृत्वा हुङ्कारमात्रतः ।
उत्पपात स पल्यङ्को वेगतो गगनाङ्गणे ॥५१५॥
पुण्यात्मानस्त्रयोऽप्येते पल्यङ्कोपरिसंस्थिताः ।
पश्यन्तो वसुधाभर्यं[1] प्राप्ता अष्टापदाचले ॥५१६॥
तत्रैकयोजनायामं चतुर्द्वारं मनोरमम् ।
सम्भूतजिनपोत्तुङ्गं भरतेश्वरकारितम् ॥५१७॥
शातकुम्भमयं कुम्भसुन्दरं[2] ध्वजराजितम् ।
प्रासादं जगदीशानां ददृशुस्ते त्रयो मुदा ॥५१८॥
स्वर्णमण्डपमङ्गागा [illegible] वराः ।
तदन्तः पीठिका देवच्छन्दकं वेदिकास्तथा ॥५१९॥
जिनार्चास्थितिमा रत्नमयां मञ्जुलपीठिकाः ।

१ ख [illegible] । २ ख कुम्भं सुन्दरं ।

तण्डुलैर्मणिपीठे च वितेनुर्मङ्गलाष्टकम् ।
जिनाग्रे ढौकयामासुर्नालिकेरादिफलावलीम् ॥५३०॥
हेमदण्डमनोहारिध्वजारोपं वितेनिरे ।
ततो मङ्गलदीपेन साकमारात्रिकं व्यधुः ॥५३१॥
अथ भक्तिभरोत्फुल्लवपुषस्ते त्रयोपि हि ।
गुणौघं वर्णयामासुरानन्दात् सकलार्हताम् ॥५३२॥
सदानन्दरमाभोगरमाप्राणप्रियोपमाः ।
भवन्तु परमात्मानः परमाधीशताकृते ॥५३३॥
प्रमादप्रभवोन्मादवैरिवारनिवारकाः ।
सर्वेषां सुखदाः सर्वे सर्वदा सर्वदर्शिनः ॥५३४॥
दुष्टाष्टकर्मनिर्मुक्ता मुक्ता निर्मलकीर्तयः ।
विज्ञातत्रिजगद्भावा भावायाभयदाः सताम् ॥५३५॥
देशनास्वर्नदीनीरपवित्रितजगत्त्रयाः ।
जयन्तु जगतामीशाः प्राप्तानन्तचतुष्टयाः ॥५३६॥
कल्याणावलिकर्तारो हर्तारो रागविद्विषाम् ।
नाभेयाद्याश्च वीरान्ता रमन्तां मम मानसे ॥५३७॥
अष्टापदे जिनाधीशान् ये वन्दन्ते स्वलब्धितः ।
तस्मिन्नेव भवे यान्ति मानवास्ते महोदयम् ॥५३८॥
एवं विशारदैर्नूनं विधिवितथविश्रुताः ।

चत्तारि परमंगाणि दुल्लहाणीह जंतुणो ।
माणुसत्तं सुई सद्धा संजमंमि य[1] वीरियं ॥५४८॥
जरा जाव न पीडेइ वाही जाव न वड्ढइ ।
जाविंदिया[2] न हायंति ताव धम्मं समायरे ॥५४९॥
संबुज्झह किं न बुज्झह संबोही खलु पेच्च दुल्लहा ।
नो हूवणमंति राइओ नो सुलहं पुणरावि जीवियं ॥५५०॥
इत्यादिदेशनां श्रुत्वा प्रतिबुद्धास्त्रयोप्यमी ।
धर्मसेनसुतो राज्ञा राज्ये संस्थापितो निजे ॥५५१॥
मन्त्रिणा रत्नसारेण सुतः सुमतिनामकः ।
सुराचार्यसमप्रज्ञः समस्थापि निजे पदे ॥५५२॥
त्यक्त्वा राज्यर्द्धिदेशादीन् दत्त्वा दानं यथोचितम् ।
कृत्वा तीर्थकृतां पूजां श्रित्वा संवेगमुत्तमम् ॥५५३॥
समं मन्त्रिकलत्राभ्यां चित्रसेननरेश्वरः ।
दमसारगुरोः पार्श्वे जग्राह व्रतमादरात् ॥५५४॥
चिरं चारित्रमाराध्य कृत्वान्तेऽनशनं तथा ।
ते प्राप्ता अच्युते कल्पे सामुदायिककर्मतः ॥५५५॥
समुदायाद्यथैवैतत् कृतं सुकृतं त्रिभिः ।
समुदायफलं भुक्त्वा क्रमात् यास्यन्ति ते शिवम् ॥५५६॥

1 B omits य । 2 A जाइंदिया ।